॥ गौर्यष्टोत्तरशतनामस्तोत्रम् ॥

॥ अथ गौर्यष्टोत्तरशतनामस्तोत्रम्॥

॥ दत्तात्रेयेण गौर्यष्टोत्तरशतनामस्तोत्रोपदेशवर्णनम्॥

इति श्रुत्वा कथां पुण्यां गौरीवीर्यविचित्रिताम् ।
अपृच्छद्भार्गवो भूयो दत्तात्रेयं महामुनिम् ॥ १॥

भगवन्नद्भुततमं गौर्या वीर्यमुदाहृतम् ।
शृण्वतो न हि मे तृप्तिः कथां ते मुखनिःसृताम् ॥ २॥

गौर्या नामाष्टशतकं यच्छच्यै धिषणो जगौ ।
तन्मे कथय यच्छ्रोतुं मनो मेऽत्यन्तमुत्सुकम् ॥ ३॥

भार्गवेणेत्थमापृष्टो योगिराडत्रिनन्दनः ।
अष्टोत्तरशतं नाम्नां प्राह गौर्या दयानिधिः ॥ ४॥

जामदग्न्य शृणु स्तोत्रं गौरीनामभिरङ्कितम् ।
मनोहरं वाञ्छितदं महाऽऽपद्विनिवारणम् ॥ ५॥

स्तोत्रस्याऽस्य ऋषिः प्रोक्त अङ्गिराश्छन्द ईरितः ।
अनुष्टुप् देवता गौरी आपन्नाशाय यो जपेत् ॥ ६॥

ह्रां ह्रीं इत्यादि विन्यस्य ध्यात्वा स्तोत्रमुदीरयेत्॥

॥ ध्यानम्॥

सिंहसंस्थां मेचकाभां कौसुम्भांशुकशोभिताम् ॥ ७
खड्गं खेटं त्रिशूलञ्च मुद्गरं बिभ्रतीं करैः ।
चन्द्रचूडां त्रिनयनां ध्यायेत्गौरीमभीष्टदाम् ॥ ८॥

॥ स्तोत्रम्॥

गौरी गोजननी विद्या शिवा देवी महेश्वरी ।
नारायणाऽनुजा नम्रभूषणा नुतवैभवा ॥ ९॥

त्रिनेत्रा त्रिशिखा शम्भुसंश्रया शशिभूषणा ।

शूलहस्ता श्रुतधरा शुभदा शुभरूपिणी ॥ १०॥

उमा भगवती रात्रिः सोमसूर्याऽग्निलोचना ।
सोमसूर्यात्मताटङ्का सोमसूर्यकुचद्वयी ॥ ११॥

अम्बा अम्बिका अम्बुजधरा अम्बुरूपाऽऽप्यायिनी स्थिरा ।
शिवप्रिया शिवाङ्कस्था शोभना शुम्भनाशिनी ॥ १२॥

खड्गहस्ता खगा खेटधरा खाऽच्छनिभाकृतिः ।
कौसुम्भचेला कौसुम्भप्रिया कुन्दनिभद्विजा ॥ १३॥

काली कपालिनी क्रूरा करवालकरा क्रिया ।
काम्या कुमारी कुटिला कुमाराम्बा कुलेश्वरी ॥ १४॥

मृडानी मृगशावाक्षी मृदुदेहा मृगप्रिया ।
मृकण्डुपूजिता माध्वीप्रिया मातृगणेडिता ॥ १५॥

मातृका माधवी माद्यन्मानसा मदिरेक्षणा ।
मोदरूपा मोदकरी मुनिध्येया मनोन्मनी ॥ १६॥

पर्वतस्था पर्वपूज्या परमा परमार्थदा ।
परात्परा परामर्शमयी परिणताखिला ॥ १७॥

पाशिसेव्या पशुपतिप्रिया पशुवृषस्तुता ।
पश्यन्ती परचिद्रूपा परीवादहरा परा ॥ १८॥

सर्वज्ञा सर्वरूपा सा सम्पत्तिः सम्पदुन्नता ।
आपन्निवारिणी भक्तसुलभा करुणामयी ॥ १९॥

कलावती कलामूला कलाकलितविग्रहा ।
गणसेव्या गणेशाना गतिर्गमनवर्जिता ॥ २०॥

ईश्वरीशानदयिता शक्तिः शमितपातका ।
पीठगा पीठिकारूपा पृषत्पूज्या प्रभामयी ॥ २१॥

महमाया मतङ्गेष्टा लोकालोका शिवाङ्गना॥

॥ फलश्रुतिः॥

एतत्तेऽभिहितं राम ! स्तोत्रमत्यन्तदुर्लभम् ॥ २२॥

गौर्यष्टोत्तरशतनामभिः सुमनोहरम् ।
आपदम्भोधितरणे सुदृढप्लवरूपकम् ॥ २३॥

एतत् प्रपठतां नित्यमापदो यान्ति दूरतः ।
गौरीप्रसादजननमात्मज्ञानप्रदं नृणाम् ॥ २४॥

भक्त्या प्रपठतां पुंसां सिध्यत्यखिलमीहितम् ।
अन्ते कैवल्यमाप्नोति सत्यं ते भार्गवेरितम् ॥ २५॥